# भारती

## संस्कृत-मासपत्रिकाया:

श्री बद्रीनाथः

श्री द्वारका

जगन्नाथः



दिसम्बरः

१९८१





वार्षिकमूल्यम् पञ्चदशमुद्राः १५.००

एकप्रतेः—सार्धैकं रूप्यकम् १.५०





...र्षम् ३२

...र्गशीर्षः

...ङ्कः २


...ज्ञान-सहितं
...र्थोऽर्जुनाय प्रयच्छति ।
...-धरो युद्धे
नम्यतां मधु-सूदनः ॥

...मगोपालशास्त्री, जयपुरम

राजस्थान-मध्यप्रदेश-गुजरात-महाराष्ट्र-मद्रास-आन्ध्र-उत्तरप्रदेश-
बिहार-पञ्चनद-सर्वकारै स्वीकृता

# विषय-सूची







प्रधानसंरक्षकाः–
जगद्गुरुशङ्कराचार्य-
स्वामिश्रीजयेन्द्रसरस्वतीमहाभागाः
कांचीकामकोटिपीठाधिपतयः




संस्थापकः
स्व. श्री उमाकान्तकेशव आप्टे
(बाबा साहब आप्टे)

प्रधान सम्पादकः
जगदीशशर्मा
साहित्याचार्यः

सहसम्पादकः
रामगोपालशास्त्री जपुयरम्





लेखैरुपष्टुता याऽऽस्ते भारतीव सितच्छदा
भारती भारतीयानां भासतां भवनेष्वलम्


संरक्षकः
श्रीदेवीशङ्करतिवाड़ी
जयपुरम्

प्रबन्ध-सम्पादकः
श्रीगिरिराजशर्मा
भारती-भवनम्
बी १५, न्यू कालोनी
जयपुरम्–१
(राजस्थानम्)

वर्षम् ३२ | मार्गशीर्षः, विक्रमाब्दः, २०३८ [ दिसम्बरः, १९८१ ] | अङ्कः २


## मङ्गलम्

सत्कन्दुकेन विमलेन निकुञ्ज-मध्ये
केलिं कलिन्द-तनया-तट-वर्तमाने ।
कृत्वा सखीभिरभितः सुपरिभ्रमन्तौ
श्रीमन्मुकुन्दचरणौ शरणं प्रपद्ये ।।

## मासावतरणम्

श्रीमन्मुकुन्द-चरणाब्ज-मधुव्रतानां
राधा-मुकुन्द-गुण-गुञ्जन-तत्पराणाम्
सद्यो व्रजन्ति निलयं व्रजिनानि पुंसा-
मेवं जनानुपदिशन् समुपैति **मार्गः** ।।

—श्रीरामगोपालशास्त्री, जयपुरम्

।। श्रीसर्वेश्वरो जयति ।।

दधीचिवंशोद्भव–जयपुर निवासि–कवि पण्डित–गोपीनाथविरचिता

# नीति-पञ्चाशिका

सम्पादकोऽनुवादकश्च —
श्रीरामगोपालशास्त्री, जयपुरम्

( पूर्वतोऽनुवृत्ता )

मनस्विनः शान्तहृदो भवन्ति
कालेऽथ कोप–ज्ज्वलितास्तथैव ।।
हेमन्त–काले न हि जातवेदा–
स्तापं दधन्माधवमास एव ।। ३७ ।।

मनस्विन इति । मनस्विनः पण्डिताः काले शान्तहृदो भवन्ति । अथ तथैव काले कोपज्वलिता भवन्ति । [1]जातवेदा हेमन्त-काले तापं दधन्न हि भवति । [2]माधवमासे वैशाख एव तापं दधद्भवति । जपजातिर्वृत्तम् ।। ३७ ।।

**भावार्थ** :—मनस्वी विद्वान् जितने शान्तहृदय होते हैं, कभी समय आने पर वे उतने ही कोपानल से प्रज्वलित भी हो जाते हैं। हेमन्त ऋतु ( मार्गशीर्ष व पौष मास ) में अग्नि ताप को धारण करने वाली नहीं होती अर्थात् शान्त हृदय मनस्वी के समान सर्वजनप्रिय अतः सेव्य होती है। वैशाख मास में ही वह ताप को धारण करती है ।। ३७ ।।

वन्दामहे चन्दन ! पाद-पीठं
शाखासु नित्यं भुजगावृतेन ।।
स्थितेन हिस्रैः सहिते धरेन्द्रे
नैवोज्झ्यते शीतलता-स्वभावः ।। ३८ ।।

---

१—अग्निः । कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् । ( अमर० १ । १ । ५३ )

२—वैशाखे माधवो राधः ( अमर० १ । ४ । १६ )

वन्दामह इति । हे चन्दन ! तव पादपीठं वन्दामहे । यतः शाखासु नित्यं भुजगावृतेन हिंस्रैः सहिते धरेन्द्रे स्थितेन त्वया शीतलता स्वभावो नैव उज्झ्यते । उपजातिर्वृत्तम् ।। ३८ ।।

**भावार्थ :**—हे चन्दन ! तेरे पादपीठ की हम वन्दना करते हैं। क्योंकि नित्य शाखाओं में विषधर सर्पों से आवृत तथा हिंसक जन्तुओं सहित पर्वत ( मलयाचल ) पर अवस्थित होते हुये भी तुमने अपने शीतल स्वभाव का परित्याग नहीं किया है ।। ३८ ।।

खलच्छलाक्रान्तहृदोऽपि जीवाः
स्वातन्त्र्यभाजोऽपि भवन्ति बद्धाः ।।
गृहे गृहे नृत्यति बद्धकण्ठः,
शाखामृगश्छद्मकृता गृहीतः ।। ३९ ।।

खलेति । अत्र स्वातन्त्र्यभाजोऽपि जीवाः खलच्छलाऽऽक्रान्तहृदः सन्तो बद्धा भवन्ति । छद्मकृता गृहीतः शाखामृगो बद्धकण्ठः सन् गृहे गृहे नृत्यति । उपजातिर्वृत्तम् ।। ३९ ।।

**भावार्थ :**—स्वतन्त्र भी जीव दुष्टों के छलबल से आक्रान्त होते हुये बद्ध हो जाते हैं । तमाशा करने वाले ( मदारी ) से पकडा गया वानर बद्धकण्ठ होता हुआ घर घर में नाचता है ।। ३९ ।।

मधुर-वचनमेव रागकारि
न तु रचितो रुचिरः शरीरवेषः ।।
अपहरति मनः पिकस्य वाणी
सिततररुङ् न पुनर्बकस्य रूपम् ।। ४० ।।

मधुरेति । मधुरवचनमेव रागकारि भवति । रचितो रुचिरः शरीरवेषस्तु रागकारी न भवति । पिकस्य वाणी मनोऽपहरति, पुनः बकस्य रूपं सिततररुक् मनो नापहरति । औपच्छन्दसिकं वृत्तम्[१] ।। ४० ।।

१—तल्लक्षणम्—वैतालीयं द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते सर्गः । औपच्छन्दसकम् ।
(पिंगल–४ । ३२–३३) तथा च— षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तरा ।
न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ।।
तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसकं कवीन्द्रहृद्यम् ।
( छन्दोमञ्जरी–५ । २५९–२६० )

**भावार्थ** :—मधुरवचन ही प्रीतिकर होता है। शरीर का केवल कृत्रिम सुन्दर वेष तो प्रीतिकर नहीं होता। कोयल की वाणी मनोहर होती है—पर बगुले का स्वच्छश्वेत कान्ति वाला रूप मन को नहीं हरता ॥ ४० ॥

अपहर हृदयं खलस्य सङ्गात्,
सदसि सतामपमानदानहेतोः ॥
किमिह बलिभुजां मुखावजुष्टं
भवति पयो महतां मनोऽपहारि ॥ ४१ ॥

अपहरेति। खलस्य सङ्गात् हृदयमपहर। कीदृशात् सङ्गात्? सतां सदसि अपमानलब्धिहेतोः। इह बलिभुजां[२] मुखावजुष्टं पयो महतां मनोऽपहारि भवति किम्? अपि तु नेत्यर्थः। औपच्छन्दसिकं वृत्तम् ॥ ४१ ॥

**भावार्थ** :—दुर्जनों की सङ्गति से हृदय को दूर करो, क्योंकि वह सभा में सज्जनों के अपमान की उपलब्धि का कारण है। यहां कौओं का झूंठा किया हुआ दूध क्या महापुरुषों के मन को भाता है? अर्थात् कभी नहीं भाता ॥ ४१ ॥

नित्यं स्वकीयोदय एव सर्वे
मुदं भजन्ते, कुमुदानि शश्वत् ॥
विधूदये फुल्लतया विभान्ति
मित्रोदये पद्मवनी–विकाशः ॥ ४२ ॥

नित्यमिति। सर्वे स्वकीयोदये सत्येव नित्यं मुदं भजन्ते। विधूदये सति कुमुदानि शश्वत् मुदं भजन्ते। मित्रोदये सति पद्मवनी-विकाशो भवति। उपजातिर्वृत्तम् ॥४२॥

**भावार्थ**—सब अपने आत्मीय का अभ्युदय होने पर ही नित्य प्रसन्न होते हैं। चन्द्रमा के उदित होने पर कुमुद विकसित हो जाते हैं। मित्र ( सूर्य ) के उगने पर पद्मों का विकास हो जाता है ॥ ४२ ॥

---

२—काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः।
ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ ( अमर–२ । ५ । २० )

रक्षन्ति लोकान् गुणिनो गुणज्ञा
अज्ञाः पुनस्तांस्तु कदर्थयन्ति ।।
छिनत्ति रुद्धोऽपि न षट्पदोऽब्जं
तद्वारणेन्द्रः कवलीकरोति ।। ४३ ।।

रक्षन्तीति । गुणज्ञा गुणिनो लोकान् रक्षन्ति । पुनरज्ञास्तु तान् कदर्थयन्ति । षट्पदो रुद्धोऽप्यब्जं न छिनत्ति । वारणेन्द्रस्तत्कवलीकरोति । उपजातिर्वृत्तम् ।। ४३ ।।

**भावार्थ** ।—गुणज्ञ ही गुणी लोगों की रक्षा करते हैं, पर अज्ञानी तो उन्हें कष्ट देते हैं । कमल में बन्द हुआ भी भौंरा उसे नहीं काटता किन्तु हाथी उसे ग्रसित कर लेता है ।। ४३ ।।

( क्रमशः )




परात्परादिशक्तेरनुकम्पयैकत्रिंशद्वर्षाण्याबालवृद्धं सीमन्तिनीसमुदयञ्च संसेव्य द्वात्रिंशद्वर्षे वयसि पदन्निदधानाऽक्षुण्णतया प्रमोदभरंतुन्दिला सहृदयसहयोगातिशयेन मानवती नायिकेव मानवतीयं भारती वचननिचयचातुरीं प्रतीक्षमाणाभवदीयामग्रिमेंके सरसमृदुवर्णपदविन्यासविरहव्यथया तनुं तनुतामाजीगमत मामिकामिति प्रार्थयते ।

विगतहायने यैः सुमनोभि र्विविधैर्गद्यैः सरसैः पद्यैस्तथा लेखनाटकेतिवृत्तलघुकथादिभिरुपन्वितगात्रा विहितास्तेषामाभारं कैः पदैः प्रकटीकर्तुं शक्यते । यैश्चमहानुभावैर्विज्ञापनानुदानादिभिरार्थिकोऽतिशायितः सहयोगः प्रादायि कतमैरर्थैस्तान्सभाजयितुं पारयतेऽयं भारतीपरीवारः ।

संस्कृतानुरागिणः संस्कृतिसमर्थकाश्चाभ्यर्थनीया अस्माकं यद्भारतीग्राहकतामङ्गीकृत्य लघुकथादिप्रबोधनेन सूक्तिरत्नैश्चकण्ठगतैरात्मीयान्बालान्भारतीयसंस्कृतिपरिज्ञानेन महिलावर्गञ्च भारतीयतावञ्चितान्नविदधानाः संस्कृतप्रसारकर्मणि बद्धपरिकरा भवेयुरिति ।

राजस्थानप्रान्तीयाःकवयो विद्वांसो लेखका विदुष्यश्च लेखिकाः प्रान्तान्तरगता लेखकाः कवयितारो विबुधाश्च विनिवेद्यन्ते यदस्यां पत्रिकायां प्रकाशनाय विशिष्टान्मौलिकान्समीक्षात्मकॉल्लेखान्कविताश्च सम्प्रेष्य प्रौढ्यान्विताम्भारतीमिमामनुगृह्णन्तु ।

भारतीयानां भवतां सहयोगादेव भारती भारतीयसंस्कृतेरादर्शताप्रकाशनाय प्रसाराय चालम्भूष्णुः ।

नवशरदि संस्कृतसंस्कृतिसमुपासकानां संस्कृतिजीवातूनां नारीणामन्येषामपि वरिष्ठानां केवलयावाचैवाभिनन्दनं कुर्वाणाः गौरवमनुभवामो यदेषां सर्वथा सहयोगेन पत्रिकेयमनुदिनं प्रगतिपथमनुसरन्ती सर्वाङ्गपूर्णा बोभविष्यति । नास्ति मनागपि संशयोदयोत्र ।

## पञ्चमं विश्वसंस्कृतसम्मेलनम् ।

महतः प्रमोदस्यायं विषयो यदन्ताराष्ट्रियसंस्कृतविद्यामहामण्डलेन भारतशासनस्य दिल्लीस्थराष्ट्रियसंस्कृतसंस्थानेन च पञ्चममेतद्विश्वसंस्कृतसम्मेलनमायोजितं भारते । अत्र वैदेशिकानां संस्कृताभ्यासिनामासन्नद्विशती समवेता रसियाऽमेरिकोभयविधजर्मनीप्रभृतिदेशेभ्यः । संस्कृतज्ञा भारतीयाः संस्कृतप्राध्यापकाः शोधकाश्च षड्शतसंख्याका वैदि-

काः शास्त्रमर्मज्ञाश्च विद्वांसः शतमेवं सम्भूयाष्टशती संस्कृतजुषां ज्ञानात्मविश्वनाथसान्निध्यान्मूर्तिमद्विद्यावतारविद्वद्वरीयस्यां वाराणस्यामेकविंशतिदिनाङ्के काशीहिन्दूविश्वविद्यालयीये विशिष्टे प्राङ्गणे प्रातः सममेलिष्ट ।

भारतीयपरम्परामनुसृत्य वैदिकघोषपुरस्सरमस्य शुभारम्भो व्यधायि। तत्र काशिराजेनसंस्कृतश्लोकै रागन्तुकानां स्वागतमतानि। एतदतिरिक्तः सर्वोऽपिकार्यकलापः संस्कृतं प्राचीनसंस्कृतपण्डितानन्हेल्यैव प्रवर्तितः।

सम्मेलनस्योद्घाटनं कुर्वाणेनोत्तरप्रदेशमुख्यमन्त्रिणा स्वकीयाः विचारा एवं प्रकटिता यत्संस्कृतं संस्कृतिमूलम् ।

अस्मिन्नेव साहित्ये मौलिकप्रश्नानुत्थाप्य समाधानमपि तेषां कृतमास्ते । पुनर्जन्मसिद्धान्तं प्रतिपाद्य मानवेभ्यो जीवनशक्तिः प्रदत्ताऽनेन, कर्मफलावश्यंभवितया कर्मकरणे प्रवृत्तिं प्रदर्श्यात्मानं सनातनमुपपादयता मायाजालापाकरणेन प्रशस्तमुक्तिमार्गाश्रयः समादिष्टः। आत्मज्ञानस्य गणितस्य च पूर्णतया प्रतिपादनमत्रैव विद्यते। ज्ञानप्रदा संस्कृतातिरिक्ताऽद्यावधि न कापि भाषा वर्तते, अतः संस्कृतस्य गम्भीरतयाऽध्ययनाध्यापनावश्यकता महताऽटोपेन निर्दिष्टा।

प्रधानमन्त्रीन्दिरागांधीमहोदयाऽपि स्वसन्देशे भाषामेनां सशक्तं साधनं सम्पर्कस्य मन्वानाऽनेकभाषाजननीं मन्यते। संस्कृतमेवास्माकीनपरम्पराणां मूलाधारः साहित्यञ्चैतदीयमक्षय्यो ज्ञानविज्ञानभाण्डागार इति स्वाभिमतं व्यक्तवती ।

समारोहस्यास्याध्यक्षपदाद्भाषमाणेन दांण्डेकरमहोदयेनोदीरितं यत्संस्कृतभाषाया उपेक्षा महतो दुःखस्य कारणमस्या आवश्यकता च विशेषतया निर्दिष्टा। एतदपि च तैः प्रोक्तं यत्संस्कृतस्य सर्वासां पाण्डुलिपीनां प्रकाशनाय विशेषायास आवश्यकः। एतेन सममेवाधुनिकस्य जगतः समक्षं महत्तापि प्रकटनीया यतस्तत्पुरातनभूमिकानिर्वाहं कर्तुं पारयेत् यदीयनिर्वाहः कदापि तेन प्राचीनकाले कृतः ।

काशीहिन्दूविश्वविद्यालयस्य कुलपतिना श्रीविभूतिनारायणसिंहमहोदयेन भूतपूर्वकाशिराजेन निगदितं संस्कृतभाषायामपचीयमानायां भारतीयसंस्कृतेर्विनाशोऽपि सुनिश्चितः। संस्कृतन्न मृतभाषाऽपि तु जीविताभाषाऽस्याः प्रचारप्रसारार्थं समुचितव्यवस्था विधातव्येति मतमासीदस्य महानुभावस्य ।

उत्तरप्रदेशमुख्यमन्त्रिणो भाषणावसाने काशीहिन्दूविश्वविद्यालयकतिपयैश्छात्रनेतृभिर्मञ्चप्रत्यग्रेसरैः प्रत्यावर्तस्वेत्यादिशब्दोद्घोषद्वारा विरोधः प्रकटितः।

हिन्दूविश्वविद्यालयस्य कुलपतिना श्रीविभूतिनारायणसिंहमहोदयेन मुख्यमन्त्रिमहोदय श्रीदाण्डेकरमहोदयश्च शकुन्तलापुत्रस्य भरतस्य चित्रोपहारेण सम्मानितौ। मुख्यमन्त्रि-

णाप्रतापसिंहेन च दाण्डेकरमहोदयाः श्रीमती कम्पामहोदया फिनलैण्डवास्तव्यः प्राध्यापको बफमहाशयो हालैण्डवासी प्राध्यापको होण्डा-महानुभावः जापानस्य प्राध्यापको लारामहा-भागः सर्वेऽप्येते सरस्वतीप्रतिमाप्रदानेन स-म्मानिताः ।

सम्मेलने काञ्चीकामकोटिपीठाधिष्ठित-स्य शङ्कराचार्यश्रीचन्द्रशेखरेन्द्रसरस्वतीमहा-भागस्य सन्देशश्रावणेन सहैव "शङ्करविजय-मकरन्दः, शङ्करोदन्तम्, आचार्यप्रशस्तिः, शङ्कराचार्यचरित्रम्, इत्यादीनि पुस्तकानि प्रादायिषत ।

मुख्यमन्त्रिणो भाषणानन्तरमुद्घाटनसमा-रोहस्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालये बौ-द्धदर्शनस्य तथा पालीविभागस्याध्यक्षेण श्री-मता पण्डितजगन्नाथोपाध्यायेन संस्कृतभाष-यैव स्वविरोधः प्रकटीकृतः उक्तवांश्च यदेत-दीयायोजनाध्यक्षेणाङ्ग्लभाषायां भाषणप्र-दानेन संस्कृतानुरागिणामनादरो न करणीय इति ।

अन्ते च श्रीमद्भी रेवाप्रसादमहोदयैर्हिन्दू-विश्वविद्यालयस्य प्राध्यापकैस्तथा राष्ट्रिय-संस्कृतसंस्थानस्याध्यक्षमहाभागैः श्रीरामकर-णशर्ममहोदयै संस्कृतमाश्रित्यैव धन्यवादो वितीर्णः । इतः पूर्वं तैः संस्कृत एवाध्यक्षीय-भाषणसारोऽपि प्रतिपादितः ।

श्रीमद्भिर्दाण्डेकरमहोदयैरियमेव सरणिः समाश्रितास्याद्यत्स्वकीयाङ्ग्लभाषणस्य सं-स्कृताश्रयेणापि भाषितं तदोभयोरपि पक्षयोः समुचितः सम्मानोऽन्यथ प्राचीनानामाङ्ग्ल-भाषानभिज्ञतया वृथैवाकारणं महते व्ययाय-कल्पेत । अत्रत्याव्यवस्थया दर्शकदीर्घिकाः कार्यक्रमसमाप्तिपर्यन्तमपि शून्यादृश्यन्त रक्षा-पुरुषाश्चासन्दीरधिष्ठिता अवालोक्यन्त ।

निमन्त्रणपत्राणां वितरणव्यवस्थाया स-मुचितप्रबन्धाभावेन शतशो जनास्तत्राग-त्यापि परावृत्ताः समारोहस्थानद्वारात् । प्रत्या-वृत्तेषु प्रतिनिधयः कतिचन विद्वांसोऽप्यासन् ।

तृतीयदिने च प्राध्यापकशोधकानां पत्र-वाचनमेकतः प्राचलदपरतश्च शास्त्रचर्चा प्राचीनपण्डितानां समेषामेव सन्तोषावहा प्राभवत् तत्र श्रीपट्टाभिरामशास्त्रिश्रीबदरी-नाथशुक्लसदृशैर्विपश्चिद्भिर्निर्णायकत्वेन स-भापतित्वेन च गौरवं वर्धितमस्याः ।

आगन्तुकानां वैदेशिकानां सत्कारः सर्वथा परमावश्यको भारतीयपरम्परानुकूलं परं भार-तीयानामवहेला किं समुचिता यैः प्राणपणैर-सुव्ययेनापि द्रविणमनादृत्य संस्कृतरक्षानु-ष्ठिता । एते ततोऽपि सम्मानार्हाः इतरथा-च्छिन्ने मूले नैव शाखा न पत्रम् इत्यस्यान्वर्थ-कता समुत्पद्येत । आन्ध्राश्रमस्थितानां पण्डि-तानां सम्मेलनस्थानं प्रति गमनागमने महान् व्ययभारोऽभवत् । संयोजकैर्व्यवस्थापकैश्च दु-र्निमित्तमिव तत्रत्यानां दर्शनमपि परिहृतं सुदूरमास्तान्नाम सम्भाषणादिकम् । वैमात्रे-यो व्यवहारश्च सम्पादितः समुद्विग्नाश्च

केचन पूर्वमेवपलायनवादं चक्रिरे । केचनासन्तुष्टा भोजनादिव्यवस्थया महत् कष्टमनुबभूवुः । भारतीयानामाहूततया समानतायामपि यद्वैषम्यमालम्बितं यानासनभोजनादिव्यवस्थायां तत्किं गैर्वाणीरक्षणापराधजन्यमुत शास्त्रचर्चापराधभवावमानना किं श्रेयसे कल्पिष्यते । पुनरपि विद्वद्भिः धैर्यान्निस्खलितमित्यहो व्यवस्थाशैथिल्यमुदीरयन्तः प्राध्यापकाः संस्कृतज्ञाः शोधका अपि श्रुता दृष्टाश्च परं प्राचोनैस्तु सर्वथैवाव्यवस्थानुभूता । षष्ठदिने दीक्षान्तसमारोहेण सार्धमेव समाप्तिर्विश्वसंस्कृतसम्मेलनस्य निर्विघ्नतया जातेति काशीविश्वनाथासीमकृपामेवमहीयसीं मन्ये विरोधिनां प्रबलविरोधस्य सत्वेऽपि । प्रस्तावाश्चामी पारिताः सम्मेलने—

(१) उत्तरप्रदेशमुख्यमन्त्रिणा संस्कृतविद्याक्षेत्रे महत्वपूर्णकार्यार्थं लक्षरूप्यकप्रदानार्थंकृतां घोषणामभिनन्दति सम्मेलनमिदम् ।

(२) काशीराजन्यासस्य श्रेष्ठत्वमभिनन्दति वराहपुराणस्य चिकित्सावृत्तेप्रकाशनार्थम् अन्येषां पुराणानामपि शीघ्रमेव प्रकाशनं सेत्स्यतीत्याशास्ते सम्मेलनम् ।

(३) यत्र कुत्रापि देशे कस्यामपि भाषायां पुराणविषयकप्रवरकार्यार्थं वर्षद्वयान्तरेण दशसहस्त्ररूप्यकात्मकं पारितोषिकमभिनन्दति काशीनरेशेनोद्घुष्टम् ।

(४) इदं सम्मेलनं पुण्यपत्तनस्यं दक्षिणमहाविद्यालयतः प्रकाश्यमानं संस्कृतभाषाया ऐतिहासिकतत्वावलम्बिनः सन्दर्भसङ्ग्रहात्मकस्य शब्दकोषस्य द्वितीयं खण्डमभिनन्दति ।

(५) इदं सम्मेलनं पालिमहाकोषस्य षष्ठप्रकाशनंसमभिनन्दति ।

(६) इदं सम्मेलनं डा० स्टर्नबाख्न्यासेनप्रकाश्यमानं महासुभाषितसङ्ग्रहस्य चिकित्सायुक्तस्य पञ्चमं खण्डमभिनन्दति ।

(७) इदं सम्मेलनं भारते हस्तलिखितसर्वेक्षणकार्यस्य विषये पारितान् पूर्वप्रस्तावान् पुनरुक्त्या द्रढ़यति ।

(८) इदं सम्मेलनं संस्कृतविद्याकेन्द्रात् यथायथं पारम्परिकपण्डितान् संस्कृतकार्येषु योजयितुं प्रचोदयति ।

(९) इदं सम्मेलनं राष्ट्रियसंस्कृतसंस्थानेन पुरीनगरे जगन्नाथसंस्कृतविद्यालयस्यायोजितं प्रस्थापनमभिनन्दति ।

पारितप्रस्तावेष्वमीषु सप्तमाष्टमयोरन्यतरयोः भारतशासनेन कार्यान्वितेर्विचारः प्रारब्धः साम्प्रतमेव ।

यदा प्रारब्धस्य विचारस्य कार्यरूपेण परिणतिस्त्वरितमेव सम्पत्स्यते तदा विश्वसमक्षं स्वत एव विश्वसम्मेलनसाफल्यं समुदेष्यतीत्याशान्वितो विरमति मर्त्यधर्मायं कश्चन ।

卐




## १–विश्वसंस्कृतप्रतिष्ठानस्य तत्त्वावधाने संस्कृतसम्मेलनम्

नवम्बरमासस्य १५ दिनांके अजमेरनगरे पं० धर्मवीरशास्त्रिमहाभागानां संयोजकत्वे वेदमन्त्रैः मङ्गलाचरणपूर्वकं सम्मेलनं प्रारब्धं अभूत् ।

सम्मेलनस्य अध्यक्षपदं अलंकुर्वद्भिः आचार्यपादैः श्रीनरसिंहाचार्यमहाभागैः उक्तं यत् संस्कृतभाषा स्वनाम्नैव स्वीयां उत्तमतां प्रदर्शयति । यथा संस्कृतं एव काष्ठं पात्ररूपेण उपयुज्यते प्रतिमारूपेण च पूज्यते असंस्कृतं तु अग्नौ प्रज्वाल्यते तथैव संस्कृतभाषा एव मानवं विकारेभ्यः उद्धृता निश्रेयसे प्रेरयति । गीर्वाणवाणी न केवलं भाषा एव इयं तु साक्षात् सरस्वती । संस्कृतभाषा सर्वतोभावेन परिपूर्णा भाषा । संस्कृतसाहित्येन सदृशं साहित्यं न क्वापि जगति उपलभ्यते । संस्कृतभाषायाः ह्रासस्य कारणं राज्यमेव । राजा कालस्य कारणम् साम्प्रतिकी राज्यसत्ता संस्कृतस्य कृते न अनुकूला अत एव अस्याः भाषायाः ह्रासः दृश्यते ।

विश्वसंस्कृतप्रतिष्ठानस्य राजस्थानप्रदेशाध्यक्षैः डा० ब्रह्मानन्दशर्मभिः भणितं यत् कस्यापि राष्ट्रस्य विकासात्पूर्वं तत्स्वरूपस्य रक्षणं आवश्यकं भवति । राष्ट्रस्य स्वरूपं तत्रत्यानां जनानां मान्यतासु परम्परासु च निहितं भवति । ताश्च साहित्येण निहिताः तिष्ठन्ति । तच्च साहित्यं संस्कृतभाषायामेव । अतः राष्ट्रस्य स्वरूपं यदि रक्षणीयं अस्ति चेत् प्रथमं संस्कृतभाषा रक्षणीया भवति ।

संस्कृतभाषायाः प्रचार-प्रसाराय तस्या सरलीकरणे अवश्यमेव प्रयासो विधेयः । परं भाषा तु नास्ति कापि सरला कठिना वा । भाषायाः सारल्यं काठिन्यं ज्ञानाज्ञानबलेन एव प्रतीयते । क्वचित् च तत् शैलीनिर्भरमपि दृश्यते । सुकुमारमार्गे सारल्यं विचित्रमार्गे काठिन्यम् । व्युत्पत्तिप्रधाना भाषा सरला रूढिप्रधाना भाषा कठिना भवति । अतः संस्कृतभाषा व्यवहारेण एव सरला भवितुं शक्नोति ।

मुख्यातिथिपदं अलंकुर्वद्भिः बल्लभसम्प्रदायाचार्यैः श्रीप्रथमेशजीमहाभागैरपि स्वीये संस्कृतभाषणे संस्कृतभाषायाः नवीनपद्धत्या पाठनं समर्पितम् ।

जोधपुरविभागसंगठनमन्त्रिणा श्रीश्रीरामदबे महोदयेन विश्वसंस्कृतप्रतिष्ठानस्य परिचयं प्रददता उक्तं यत् प्रतिष्ठानस्य "संस्कृतभाषा एव राष्ट्रभाषा भवितुं अर्हति" इति संकल्पस्य सिद्धये। सर्वत्रापि संस्कृतज्ञैः मासिकी पाक्षिकी वा गोष्ठी समायोजनीया येनं संस्कृतभाषा वाग्व्यवहारे समागच्छेत्।

अस्मिन् अवसरे श्रीसुभाषतनेजामहोदयेन सरलायां संस्कृतभाषायां रचितानि सुमधुराणि गीतानि श्रावितानि। पं० श्रीधरशास्त्रिमहाभागैः तथा श्रीईश्वरदत्तमहाभागैश्च संस्कृतभाषायाः महत्त्वे संस्कृतभाषायाः प्रचारप्रसार-प्रयत्नविधाने स्वकीयाः विचाराः प्रकटिताः।

श्रीराम दबे
जोधपुरम्

## २–वैदिकधर्मः समापयितुं न शक्यः

विश्वहिन्दुपरिषदग्रध्यक्षा मेवाडस्य महाराणा श्रीभगवतसिंहमहोदयाः सम्पूर्णानन्दसंस्कृतविश्वविद्यालये समायोजिते नागरिकस्वागतसमारोहे स्वविचारानित्थं प्राचकटन्-वस्तुतो वैदिकधर्मः कापि शक्तिः, बहुसंख्यकं हिन्दुसमाजं न केऽपि विभेत्तुं समर्थाः। पञ्चदशवर्षपूर्वं संस्थापितायाः विश्वहिन्दूपरिषदः संस्थापकैः हिन्दुसमाजजागरणस्याभियानं प्रारब्धम्। परिषदः उद्देश्येषु मानवजातेः धर्मस्य चोत्थानकार्यं हिन्दुसमाजे स्वाभिमानस्थापनम् आत्मबलोत्पादनञ्चं सम्मिलितानि। परिषद् कार्यकर्तारः ग्रामे ग्रामे गत्वा जनतासु समाजस्य धर्मस्य पवित्रतायाश्च ज्योतिः प्रज्वालयन्तु। अस्मत्समाजे यद् दौर्बल्यं तदात्मबलेनैव दूरीकर्तुं शक्यते। मानवधर्मो वैदिकधर्मश्च भारतस्य निधिः। सम्प्रति समाजस्य कतिपये जनाः प्रलोभनवशात्स्वधर्मं त्यजन्ति, स्थितिरियं हिन्दुसमाजस्य कृते भयावहा।

अस्मिन्नवसरे काशिनरेशैः डा० विभूतिनारायणसिंहदेवैः प्रोक्तं यद् हिन्दुधर्मः समाजश्च तदैव श्वसितुं शक्ष्यतः यदा वयं वाग्देव्याः देववाण्याः बलं प्राप्स्यामः। परिषदः संघठनमन्त्रिणा न्यायमूर्तिना श्रीशिवनाथकाटजूमहाभागेन कथितं यद् बहुसंख्यकस्य हिन्दुसमाजस्य विघटनप्रयासः सर्वथा असह्यः। यद्यपि अरबराष्ट्रैः सह चास्माकं मैत्री परं हरिजनानां तैः द्वारा मुस्लिमधर्मान्तरणं कदापि न सह्यम्।

## ३–श्रीमतां पट्टाभिरामशास्त्रिमहाभागानामभिनन्दनम्

दिसम्बरमासस्य २४ तारिकायां प्रातः ८–३० वादने नवदिल्यां विद्वन्मूर्धन्यानां हीरकजयन्त्यवसरे समभिनन्दनं कृतम्। समायोजकाः श्रीमन्तो डा० मण्डनमिश्रमहोदया आसन्। एतदवसरे अभिनन्दनग्रन्थस्य समर्पणं भारतस्य प्रधानमन्त्रिणा विहितम्। अभिनन्दन-समितेरध्यक्षा सभापतयश्चासन् पण्डित–कमलापति-त्रिपाठिनः। प्रधानमन्त्रिणा संस्कृतस्य महत्त्वं पण्डितप्रवराणां शास्त्रिमहोदयानां पाण्डित्यं तत्कृतां संस्कृतसाहित्यसेवामभिलक्ष्य स्वविचाराः प्रकटिताः।

## ४–बिहार–राज्य–संस्कृत–सम्मेलनम्–

१९८२–मार्चमासस्य प्रथमसप्ताहे सीतामहीस्थाने राज्यस्तरीयं-संस्कृत-सम्मेलनं भविता। सम्मेलने विचारगोष्ठ्यः स्मारिका-प्रकाशनं नृत्य-संगीतनाटकादीनां प्रदर्शनं, विशिष्ट-संस्कृतविदुषां भाषणानि भविष्यन्ति। राज्यस्य संस्कृतविद्वांसः सम्मानिताः करिष्यन्ते। स्मारिकायाः कृते देशस्य संस्कृतविद्वांसः संसूच्यन्ते यत्तो संस्कृत–संस्कृति–सम्बन्धिनो निबन्धान् वैदेहीसंस्कृत-परिषद् सीतामही ( बिहार ) इति संकेते सम्प्रेषयन्तु।

## ५–स्वर्णपदकविजेतृ–छात्रस्याभिनन्दनम्

नवम्बरमासस्य २६ तारिकायामुज्जयिन्यां अखिलभारतीयकालिदाससमारोहे, अन्त-र्विश्वविद्यालय-वादविवादप्रतियोगितायां प्रथमं स्थानं प्राप्तवतः स्वर्णपदकविजेतुः आसजीव-कुमारशर्मणः पिलखुवानगरे समभिनन्दनं समायोजितं लोकहित–परिषद्–द्वारा।

पिलखुवानगरस्य राणा-कालेजे हिन्दीविभागाध्यक्षस्य डा० चन्द्रपालशर्मणो युवा पुत्रश्चायं हापुड़नगरे ( सरस्वती विद्यालये ) बी० ए० द्वितीयवर्षे अध्ययननिरतोऽस्ति। समारोहे विशिष्टा विद्वांसः पत्रकाराः समुपस्थिता आसन्।

श्री "पद्म" शास्त्री
१२८ मुक्तानन्दनगर
गोपालपुरारोड जयपुरम्-१५

# श्रद्धाञ्जलिः



सखेदमिदमावेद्यते यद् दिसम्बरमासस्य १८ तारिकायां **भारती-संस्कृत-मास-पत्रिकायाः सम्पादकाः श्रीदीनानाथत्रिवेदी "मधुपः"** महोदयाः मासमेकमस्वास्थ्यावरोधेन दिवमुपगताः। श्रीमधुपमहोदया 15 वर्षाणि यावद् भारती-पत्रिकायाः सम्पादनमकुर्वन्। पूर्वमेते महानुभावा महाराजा-संस्कृत-महाविद्यालये ( जयपुरे ) व्याख्यातृ-पदमलमकुर्वन्।

**24-12-81** दिनांके भारती-भवने श्रीमतां देवीशंकर-तिवाडी-महोदया-नामाध्यक्ष्ये शोकसभा चैका समायोज्यत। दिवंगताय मधुपमहाभागाय विद्वद्भिः श्रद्धाञ्जलयः सादरं समर्प्यन्त। मधुपमहोदयाः संस्कृतस्यानन्यमूकसेवका यावज्जीवं भारतभारतीमसेवन्त। दुःखावहे चास्मिन्नवसरे भारतीपरिवारो दिवंगतात्मने तस्मै श्रीमधुपमहोदयाय सादरं, सविनयं, हृदयेन श्रद्धाञ्जलिमर्पयतीति।



# पञ्चमं विश्वसंस्कृतसम्मेलनम्

डा० ब्रह्मानन्दशर्मा, अजमेर ( राज० )

पञ्चमं विश्वसंस्कृतसम्मेलनं 1981 ख्रिस्ताब्दे अक्तूबरमासस्य एकविंशाद् दिनाङ्कादारभ्य षड्विंशदिनाङ्कं यावत् भारतस्य सुविख्यातायां सांस्कृतिकनगर्यां वाराणस्यां सोल्लासं सम्पन्नम् । देशदेशान्तरेभ्योऽनेके विद्वांसः शास्त्रचर्चार्थमत्र ज्ञानयज्ञे संगताः । राजस्थानप्रान्ताद् ये प्रतिनिधयोऽत्र समायातास्तेष्वहमप्यन्यतम आसम् । अवसरेऽस्मिन् साहित्यशास्त्रधर्मदर्शनादिसम्बन्धिन्योऽनेका विचारगोष्ठ्य आयोजिताः । आसु गोष्ठीषु शोधपत्रपठनेन सह विचारविमर्शोऽपि संवृत्तः । अहमादितोऽन्तपर्यन्तं साहित्यशास्त्रगोष्ठ्यामेव सम्मिलित इति तस्यामेव पठितानि शोधपत्राण्यधिकृत्य अत्र किञ्चित्प्रस्तौमि । कस्यापि नवीनस्य तथ्यस्याविष्करणं पूर्वविदितानां नवीना वा व्याख्येति शोधस्य समुपस्थाप्यमानं लक्षणम् । लक्षणमेतन्न हि साम्प्रतिकेऽखिले शोधकार्ये घटते । परं कार्यस्यास्योपयोगिता स्पष्टैवेति लक्षणमेतत्तत्र यथाकथञ्चित्संगच्छते । शोधकार्यमेतत्प्राधान्येन चतुर्विधम्—संकलनम् ऐतिहासिकविवरणं वा, सम्पादनं तुलनात्मकाध्ययनञ्च, विवादविषयभूतानां तत्त्वानां विवेचनम्, नवीनसिद्धान्तस्य समुपस्थापनञ्च । आद्ययोः प्रकारयोर्निरूपणप्रसंगेन यदि नवीनताया अपि स्वल्पतया अधिकतया वा स्पर्शस्तर्हि तत्र कश्चन विशेषः स्वीकार्यः । तृतीये प्रकारे नवीनता आविर्भवत्येव । चतुर्थे तु सा स्पष्टेत्यसंशयम् । साहित्यशास्त्रगोष्ठ्यां यानि पत्राणि प्रस्तुतानि तेषामप्येतदेव वर्गीकरणम् । अस्मिन् वर्गीकरणे यौ आद्यौ प्रकारौ तत्सम्बन्धीनि पत्राण्यधिकृत्य न हि विस्तरभयादत्र किञ्चित्प्रस्तूयते । तृतीये प्रकारे यानि पत्राणि पठितानि तानि निम्नलिखितानि सन्ति।—

1. स्वभावोक्तेरलंकात्वम्
   by Dr. Gayamant Mishra.
2. Natya Rasa as an instument of stageabiliy of plays—by Dr. Suryakant Bali.
3. Did Pornography matter in Sanskrit literary criticism–by Dr. Dhirendra Nath Banerjee.
4. Nature of Obscenity in some forms of Sanskrit drama–by Dr. R. C. Dwivedi.
5. Hasya Rasa by Dr. A. D. Shastri.
6. करुणरसस्यांगित्वम् by Dr. P. Sriramamurthi.

7. ध्वनिप्रस्थानविदां वत्सलाविषयकोऽनुपपत्तिको विरोधः by Dr. Chandrakishore Goswami.

8. The Pramanas or criteria in Indian Aesthetics and the nature of 'Artha' in poetry.
by Dr. K. Krishnamoorthy

9. The soul of poetry–A new approach by Dr. Hari Dutt Sharma.

10. सत्यानुभूतिरात्मा काव्यस्य by Dr. Brahmanand Sharma.

अत्र प्रथमं पत्रमलंकारविशेषविवेचनसम्बन्धि। पत्रेऽस्मिन् श्रीमिश्रमहाभागैरस्यालंकारस्य पक्षविपक्षयोरालंकारिकाणां मतानि सविस्तरं प्रस्तुतानि अस्य चालंकारत्वं स्वीकृतम्। मिश्रमहाभागानामत्र यो निष्कर्षः स तु स्वीकार्य एव परं विपक्षिणामत्र ये तर्कास्तेषां साकल्येन प्रत्याख्यानमपेक्षितम्। अत्र अलंकार्यालंकारभेदसम्बन्धिनः कुन्तकप्रस्तुताः स्वभावोक्तिविरोधिनस्तर्काः सविशेषमुल्लेखनीयाः। स्वभावोक्तेरालोचकानामालोचनमिति विषयमधिकृत्य मया विश्वम्भरापत्रिकायां पूर्वं यो लेखः प्रस्तुतस्तत्रैषां तर्काणां निराकरणप्रयासो विहितः।

द्वितीये पत्रे लेखकेन एतत्प्रयतितं यदादौ नाट्यरसोऽभिनयमात्रायत्त आसीदिति काव्यरसायत्तस्य भेदः स्वीकार्यः। परं मन्मतानुसारं न हि एतद्युक्तियुक्तं प्रतिभाति। अत्र चायं हेतुर्यन्नाट्ये पाठ्यस्यापि स्थितिरिति काव्यरसस्तत्रानायत्याऽऽयातः।

तृतीये चतुर्थे च पत्रे लेखकाभ्याम् अश्लीलतासिद्धान्तस्य विवेचनं कृतम्। अत्रैतत्तु सत्यमेव यदश्लीलतासिद्धान्तो देशकालानुसारीति सामाजिकमान्यतापरिवर्तनेन तत्रापि परिवर्तनम्। परं सामाजिकमान्यतापरिवर्तनेन न हि केवलमस्मिन् सिद्धान्ते अपितु अन्यत्रापि भावादिषु परिवर्तनं जायते। एवं स्थिते का नाम अश्लीलता, कथं देशकालानुसारमत्र परिवर्तनम्, किं शृङ्गाररसे एवास्याः स्थितिरन्यत्रापि वा सा सम्भाव्यत इत्येवं विषयाः सविस्तरं निरूपणीयाः।

पञ्चमे पत्रे लेखकेन हास्यस्य रसत्वं निराकृतम्। परमेतन्न हि युक्तियुक्तं प्रतिभाति। अत्र चायं हेतुर्यत् सकलहृदयगोचरता, स्थायिभावस्य चेतनासामान्यस्तरवर्तित्वम् साधारणीकरणञ्चेत्येतानि यानि रसतत्त्वानि मया अभिनवरसमीमांसाशीर्षके स्वग्रन्थे निरूपितानि तेषामत्रापि स्थितिरिति रसान्तरेभ्यः सत्यपि हास्यस्य कस्मिंश्चिद् विशेषे न हि अस्य रसत्वापलापसम्भावना।

षष्ठे पत्रे लेखकमहोदयैः करुणरसस्यांगित्वं निराकृतम्। अत्र चायं तेषां तर्को यद्रसोऽयं न हि पुरुषार्थसम्बन्धीति तस्य गौणता। अत्रोच्यते-पुरुषार्थचतुष्टयं काव्यस्य प्रयोजनेन सम्बद्धम्। प्रयोजनञ्च काव्यस्वरूपापेक्षया

गौणमेवेति अंगित्वनिर्णये काव्यस्वरूपमेव विचारार्हं न तु तत्प्रयोजनम्। काव्येषु च च करुणरसस्य बहुत्र दर्शनमिति तस्यांगिता। किञ्च इष्टावाप्तिः सर्वेषां समीहिता। परं लोके न हि सा प्रायेण सम्भवतीति शोकस्याधिक्यम्। एवं स्थिते शोकस्थायिनः करुणस्यांगिता अनायत्याऽऽयाता।

सप्तमे पत्रे डा० चन्द्रकिशोरगोस्वामिभिर्विरोधितर्कनिराकरणपुरस्सरं वात्सल्यं रसत्वेन स्थापितम्। गोस्वामिमहाभागानां मतमेतद् युक्तियुक्तमभिनन्दनीयञ्च। 'रतिर्देवादिविषया व्यभिचारी तथा अञ्जितो भावः प्रोक्तः' इति प्रतिपादयद्भिः ध्वनिवादिभिर्वात्सल्यस्य यद्भावेऽन्तर्भावस्तत्र युक्तम्। अत्र चेदं कारणं यत् सकलसहृदयगोचरता, स्थायिभावस्य चेतनासामान्यस्तरवर्तित्वम् साधारणीकरणञ्चेतानि यानि रसतत्त्वानि मया अभिनवरसमीमांसाशीर्षके स्वग्रन्थे निरूपितानि तेषां शान्ते भक्तौ वा भवतु नाम अभावः वात्सल्ये तु तेषां निस्संदिग्धा स्थितिः।

अष्टमे पत्रे डा० कृष्णमूर्तिमहाभागैः साहित्यशास्त्रगतानां प्रमाणानां काव्यगतस्य चार्थस्य विवेचनं विहितम्। विषयोऽयं विद्वद्भिरस्पृष्टप्राय इति साहित्यशास्त्रगतानां प्रमाणानां प्रमाणान्तरेभ्यः को विशेषः, कथञ्चास्य विशेषस्य काव्यगतस्यार्थस्य वैशिष्ट्ये उपकारित्वमित्यादिदिशा लेखकेनात्र सविस्तरं लेख्यम्।

नवमे पत्रे डा० शर्ममहाभागैर्भावः काव्यात्मत्वेन निरूपितः। परं न हि एतद्युक्तियुक्तं प्रतिभाति। अत्र चेदं कारणं यदेतत्काव्यलक्षणव्याप्तिदोषग्रस्तम्। काव्ये संलक्ष्यक्रमव्यंग्यध्वनेरपि सद्भावः, न च तत्र भावस्पर्शः। किञ्च व्यंग्यव्यतिरिक्तस्य वाच्यसौन्दर्यस्यापि काव्येऽन्तर्भावः, न चात्र भावसंस्पर्शः। अपरञ्च काव्यात्मभूतस्यास्य भावस्य लोकगताद्भावात्को विशेष इत्यपि स्पष्टीकरणीयम्।

काव्यस्वरूपनिरूपणप्रसंगेन डा० रेवाप्रसादद्विवेदिमहाभागैः काव्यालंकारिकाशीर्षके प्रसिद्धे स्वग्रन्थेऽलंकारः काव्यात्मत्वेन स्वीकृतः। अलंकारोऽयं व्यापकं तत्त्वम्। ध्वन्यादितत्त्वानामत्रैवान्तर्भावः। किञ्च सौन्दर्यापरपर्यायमलंकारः प्रतीयमानो न वाच्यः। सरणिरेषा अभिनवेत्यभिनन्दनीया। काव्यसत्यालोकशीर्षके मदीये ग्रन्थे सरणिरेषा समीक्षितेति नेह वितन्यते।

सत्यानुभूतिरात्मा काव्यस्येत्यस्मिन् पत्रे मया सत्यानुभूतिः काव्यात्मत्वेन प्रतिपादिता। मतमेतत् काव्यसत्यालोके सविस्तरं निरूपितम्। अस्यौचित्यानौचित्ये विद्वांस एव प्रमाणम्।



# आयुर्वेद-स्तम्भः–

## आयुर्वेदशास्त्रोपदिष्टधर्माचरणम् (सद्वृत्तम्)

(ले०—वैद्य श्री ऋषिदेवः सोलंकी, भिषगाचार्यः, निरीक्षकः, आयुर्वेदविभागः जोधपुरम्)

आयुर्वेदशास्त्रानुसारेण अत्र धर्मो नाम सद्वृत्तम्-सदाचार इत्यर्थः। तस्यैव अस्मिन्निबन्धे किंचित् समासेन वर्णनं विधीयते।

शारीरकस्वास्थ्यसंरक्षणार्थं स्वस्थवृत्तस्य विवेचनं प्रायः सर्वेषु ग्रन्थेषु विशदरूपेण अस्त्येव, अत्रापि दिनचर्या-रात्रिचर्या-ऋतुचर्यादीनां वर्णनं पाठका अन्यनिबन्धेषु पठिष्यन्त्येव। तासां चर्याणामनुपालनेन शरीरे दोषाणां वातपित्तकफानां, धातूनां रसरक्तादीनां किंचाग्नेः साम्यावस्था संजायते, तेन च शारीरकरूपेण मनुष्यो स्वस्थतामनुभवति, किन्तु तत्रापि पूर्णस्वस्थता तु यदा हि-आत्मेन्द्रियमनसां प्रसन्नावस्था तु रजस्तमोभ्यां निवृत्ते किं सत्त्वगुणोदये एव संभवति, यतो हि रजस्तमसी द्वौ मनोदोषौ स्तः, तयोर्निवारणार्थं सद्वृत्तस्यानुपालनमावश्यकम्। यथा हि चरके तस्मादात्महितं चिकीर्षता सर्वेण सर्वं सर्वदा स्मृतिमास्थाय सद्वृत्तमनुष्ठेयम्–अस्यानुपालनेन पूर्णारोग्यलाभः किञ्च जितेन्द्रियता भवति।

चरकमतानुसारेण सद्वृत्तमित्थं, तद्यथा–देवगोब्राह्मणगुरुमातापित्र्यतिथिवृद्ध(विद्यावय-बल-एवं पदवृद्ध) सिद्धतपस्व्याचार्यानर्चयेत्। प्रातःसायं यज्ञमुपाचरेत्। औषधीः प्रशस्ता धारयेत्। यथाऋतु द्वौ कालौ उपस्पृशेत्। मलायनेष्वभीक्ष्णं पादयोश्च वैमल्यमादध्यात्। त्रिःपक्षस्य किंच वर्तमानसमये तृतीयदिने केशश्मश्रुलोमनखान् संहारयेत्। नित्यमनुपहतवासाः, सुमनाः, सुगन्धिः, स्यात्। समयोचितसाधुवेशः, प्रसाधितकेशः मूर्धश्रोत्रघ्राणपादतैलनित्यो, गृहागतः किंवा सम्मुखे प्राप्तः पूर्वाभिभाषी कुशलक्षेमपृच्छकः स्यात्। प्रसन्नवदनः दुर्गेष्वभ्युपपत्ता, अतिथीनां पूजकः, समयप्राप्ते हितमित-मधुरार्थवादी, जितात्मा, धर्मात्मा, उन्नतिहेतावीर्ष्युः स्वयमपि तस्मिन् मार्गे अग्रेसरः स्यात्, न तु फले ईर्ष्युः। निश्चिन्तः निर्भीकः धीमान्, आहारे व्यवहारे त्यक्तलज्जो भवेत्, अन्यत्र लज्जाशीलः महत्त्वाकांक्षी (महत्त्वाकांक्षया विना सत्कार्येष्वपि प्रवृत्तिर्न भवति) महोत्साही, लौकिककार्येषु दक्षः, सर्वप्राणिषु दयालुभावः, कुपितेष्वपि स्वकीयमृदुस्वाभानुरूपकरणे दक्षः, भीतानामाश्वासयिता, दीनानामभ्युपपत्ता, सत्यसन्धः, सामप्रधानः, धीरः,यथा हि–विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः–एतादृशः धीरः परपुरुषवचनसहिष्णुः क्रोधरहितः, प्रशमगुणदर्शी, रागद्वेषहेतूनां हन्ता च।

नानृतं ब्रूयात्, नान्यस्वमाददीत, नान्यस्त्रियमभिलषेत्, न चान्यश्रियम् । न वैरं रोचयेत, न कुर्यात्पापं (पापं हि परपीडनं) न पापेऽपि पापी स्यात्, नान्यदोषान् ब्रूयात्, नान्यरहस्यमागमयेत्, नाधार्मिकैर्नराज्यद्विष्टैः सहासीत् तथा न मैत्रीं कुर्यात्, नोच्चैर्हसेत्, न शब्दवन्तं मारुतं मुंचेत्, नासंवृतमुखो जृम्भाक्षवथुं हास्यं वा प्रवर्तयेत् । न नासिकां कुष्णीयात् न दन्तान् विघट्टयेत् । न नखान् वादयेत्, नास्थीन्यभिहन्यात्, न भूमौ विलिखेत्, न छिन्द्यात्तृणम् । न पापवृत्तान् स्त्रीमित्रभृत्यान् भजेत् न विगुणामंगैश्चेष्टेत, न हुंकुर्याच्छवम्, नोत्तमैर्विरुद्धयेत् । नावरानुपासीत, नानार्यमाश्रयेत् । न भयमुत्पादयेत्, नाविगतक्लमो ना नाप्लुतवदनो न नग्नमुपस्पृशेत् न स्नानशाट्या स्पृशेदुत्तमांगम् ।

भोजनमपि पितृभ्यो नादत्त्वा गुरुभ्यो नातिथिभ्यो नोपाश्रितेभ्यो नापुण्यगन्धेनाप्रक्षालितपाणिपादवदनो नाशुद्धमुखो न विमना नाभक्ताशिष्टाशुचिक्षुधितपरिचरो, नापात्रीष्वमेध्यासु, नादेशे नाकाले न प्रतिकूलोपहितमन्नमाददीत ।

न स्त्रियमवजानीत, नीतिविश्रम्भयेत्, न गुह्यमनुश्रावयेत्, नाधिकुर्यात्, न सतो न गुरून् परिवदेत्, न सन्ध्यासु अभ्यवहाराध्ययनस्त्रीस्वप्नसेवी स्यात्, न बालवृद्धलुब्धमूर्खक्लिष्टक्लीबैः सह सख्यं कुर्यात् । नैकः सुखी, न दुःखशीलाचारोपचारः न सर्वाविश्रम्भी, न सर्वाभिशंकी, न सर्वकालविचारी । न कार्यकालमतिपातयेत्, प्रकृतिमभीक्ष्णं स्मरेत् । नापवादमनुस्मरेत् ।

उपर्युक्तसद्वृत्तस्य स्मरणं यदि प्रतिक्षणं स्यात्तर्हि तु मानवो कदापि शारीरिक-मानसिकरोगग्रस्तो नैव स्यात् । आधुनिकपाश्चात्य-अमेरिका-योरोपनिवासिनो जनास्तु—केवलमर्थमेव समग्रसुखस्य एकमात्रकारणं मन्यन्ते, तत्र तु अर्थस्याभावो नैव विद्यते । अनेकानि वैज्ञानिकानि उपकरणानि तत्रसन्ति । भौतिकरूपेण ते सर्वसाधनसम्पन्नाः सन्ति तथापि तेषां कृते न पूर्णं सुखं विद्यते । तथा च अनेकमहारोगग्रस्ताः सन्ति यथा—रक्तचापवृद्धिः (हाईब्लडप्रेशर) उन्माद, अपस्मार, हृद्रोग, पक्षाघात, रक्तार्बुद (कैंसर) प्रभृतयः । अतः यदि उपर्युक्तसद्वृत्तानुसारि तेषां जीवनं स्यात्तर्हि तु निश्चयेन सुखस्यावाप्तिर्भवेत् ।

अस्मिन्नेव प्रसंगे निम्नलिखितानि शास्त्रीयपद्यानि सन्ति तेषां स्मरणं किं च अनुपालनं सर्वदैव कुर्यात् :—

आर्द्रसन्तानतात्यागः कायवाक्चेतसां दमः,
स्वार्थबुद्धिः परार्थेषु पर्याप्तमिति सद्व्रतम् ।
नक्तं दिनानि मे यान्ति कथम्भूतस्य सम्प्रति,
दुःखभाङ् न भवत्येवं नित्यं सन्निहितस्मृतिः ।
त्यागः प्रज्ञापराधानामिन्द्रियापशमः स्मृतिः,
देशकालात्मविज्ञानं सद्वृत्तस्यानुसेवनम् ।
आगन्तुनामनुत्पत्तावेष मार्गो निर्दशित,
प्राज्ञः प्रागेव तत्कुर्यात् हितं विद्यात् यदात्मनः ।
आप्तोपदेशविज्ञानं प्रतिपत्तिश्च कारणम्,
विकाराणामनुत्पत्तौ उत्पन्नानां च शान्तये ।

# श्रीविवेकानन्दचरितम्

## कवेः प्राक्कथनम्

श्रीविश्वनाथ केशव छत्रे शास्त्री कल्याण ( ठाणें )

श्रीकालीदेवीसाक्षाद् दर्शनं यथेष्टं भुंजानस्य, देव्या सह सुखालापं समये च कुर्वतः, रामकृष्णपरमहंसस्य परमानुग्रह-पात्रीभूतः एकमात्रशिष्यः अमेरिकायां शिकागोनगरे सर्वधर्मपरिषदि, अलौकिकेन संन्यासिवेषेण परः सहस्रप्रेक्षकाणां चक्षूंषि समाकर्षन् ब्रह्मचर्यवर्चसा तेषु प्रभवन्, 'उपस्थिताः, भो मम भगिन्यः बांधवाश्च' इति घीरगंभीरवाचा अश्रुतपूर्वेण अभिधानेन श्रोतृसमूहं संबोधयन् गीतोपनिषदादि-भारतीय-संस्कृतिमूलं वाङ्मयम् अधिकृत्य कृतेन अदीर्घेण परं

पापवृत्तवचः सत्वा स्वका च कलहप्रियाः,
मर्मोपहासिनो लुब्धाः परवृद्धिद्विषः शठाः ।
परापवादरतयश्चपलारिपुसेविनः,
निर्घृणास्त्यक्तधर्माणः परिवर्ज्या नराधमाः ।
बुद्धिविद्यावयःशीलधैर्यस्मृतिसमाधिभिः,
वृद्धोपसेविनो वृद्धा स्वभावज्ञा गतव्यथाः ।
सुमुखा सर्वभूतानां प्रशान्ताः संशितव्रताः,
सेव्याः सन्मार्गवक्तारः पुण्यश्रवणदर्शनाः ।
तदात्वे चानुबन्धे च यस्य स्यादशुभं फलम्,
कर्म वै तन्न कर्तव्यमेतद् बुद्धिमतां मतम् ।
इत्याचारः समासेन यं प्राप्नोति समाचरन्,
आयुरारोग्यमैश्वर्ययशोलोकांश्च शाश्वतान् ।



तेजस्विना भाषणेन वैदिकधर्मश्रेष्ठत्वस्य प्रतिपादनेन च सर्वेषामपि हृदयाणि संस्पृशन् ततश्च भारतीयोच्चसंस्कृतेः यशोडिडिमं दशदिक्षु निनादयन् स्वामिविवेकानंदः किं कविमनः न प्रेरयेद् महाकाव्यरचनायै ?

वैदिकधर्मस्य अभिमानिभिः तस्य प्रचारः न क्रियते प्रलोभनेन, ख्रिस्त-'मिशनरि'-भिरिव, न वा उद्यतखड्गेन भापयित्वा मोहंमदीयैरिव । सः वैदिक धर्मः नितरां परधर्मसहिष्णुः । उदा० पारसीकाः मोहंमदीय-खड्ग-भीत्या भारतं शरणम् आगताः सुखेन वसंति, स्वधर्मानुष्ठानं यथेप्सितं कुर्वंतश्च देशसेवामपि विदधति-जमशेदजीटाटा तीक्ष्णायसस्य (Steel) विद्युतश्च प्रकल्पाभ्यां, दादाभाई नौरोजिः देशभक्त्या, काबालिः प्रथमभारतीय वैमानिकसेवया ।

स्वामिवरैः विवेकानंदैः वैदिकधर्मप्रचाराय, मानवसेवायै अज्ञानदारिद्र्यनिरसनाय, आपदग्रस्त—साहाय्यार्थं च स्वगुरोर्नाम्ना संस्था प्रवर्तिता 'रामकृष्ण मिशन्' इत्यभिधा । देशे विदेशेषु च अस्याः शाखाः उत्तमं कार्यं कुर्वंति । कार्यकर्तारः संन्यासिनः न केवलं भारतीया, परं वैदेश्याः अपि । भगिनीनिवेदिता-समानाभिः वैदेश्यस्त्रीभिरपि

स्वामिविवेकानंदानां शिष्यत्वं सादरम् अंगीकृतं भारतीयजीवनेन सह। संस्थाकार्यकर्तृ-संन्यासिना किमाचारणेण भवितव्यम् तद् 'ॐ तत्सद् घोषं प्रोच्चैः कुरु सखे। कुरु यते।' इति गीते ( Song of the Sanyasin ) सुष्ठु विशदीकृतं स्वामिवर्यैः। श्रीभगवद्-गीतांतर्गततत्त्वज्ञानस्य सारभूतं तत् तैः आंग्ल-भाषायां विरचितम् कविना देववाण्यां समग्रम् अनूदितम् अत्र उपहारीकृतं रसिकवृंदाय।

नेताजि-सुभाषचंद्र-बोसः बाल्ये, यौवने च प्रभावितः 'मिशन' संन्यासिनां प्रबोधनपर भाषणैः, आदौ वैयक्तिकीं पारमार्थिकमुक्तिं साधयितुकामः पारतंत्र्यशृङ्खलाभिः निपीड्यमानायाः मातृभुवः मुक्तिं साधयितुं बलवत् प्ररितः महति देशभक्ते परिवर्तितः। सः आंग्लशासनकृतायाः स्थानबद्धतायाः रहः निरोधाय देशांतरं गत्वा, स्वातंत्र्यसेनां च स्थापयित्वा घोरं समरं कृतवान् आंग्लैः सह, अमरत्वंच गतः परिवर्तित-परिस्थित्याम् आत्मापर्णं सुखेन कृत्वा।

श्री वि. वि. पेंड्से रचित 'राष्ट्रद्रष्टे विवेकानंद (मराठी), डॉ. ग बा पळसुले-प्रणीत विवेकानंदचरितम् शारदा ग्रन्थमाला पुष्पम् ) डॉ० वर्णेकरविरचितं 'विवेकानंद विजयम्' नाटकम् (तत्र संस्कृत नाटकस्पर्धायां प्रेक्षिते मूर्तिपूजोपयोगित्वविषयकः प्रवेशः सर्वधर्म परिषत्-सबद्धः प्रवेशः, कन्याकुमारी सान्धि स्वामिभिश्च कृता भारतमातुः स्तुतिः इति विशेषैः नितरां मनोहारि प्रतीतम्) मम सुहृद्वराद् दिष्ट्या लब्धं दुर्लभप्रायं पुस्तकद्वयम् The master and his disciple) songs of swami Veivekananda, इति आधारभूतां प्रचुरां सामग्रीं तदितरैः ग्रंथैः सार्कः प्राप्तवान् अहम् उत्साहितः काव्यरचनां सवेगं कर्तुम्।

यौवने मया पठितं श्रीरामकृष्ण-विवेकानंदचरिते, श्रुतानि तद्विषये व्याख्यानानि कृतं चिंतनं गुरुशिष्ययोः बोधस्य च उपकारकारि भृशम् अभूत् अस्मिन् महति उद्यमे।

निर्भयत्वं, सत्यवादित्वं, सेवावृत्तित्वं समयज्ञत्वं विश्वबंधुत्वम् इत्यादिगुणोत्तमः बाल्यात् समयानुसारं कथं नरेंद्रे प्रकटीभूताः तेषां वर्णनम् अत्र कृतम्। यथा सः बालः क्रमशः उन्नतिपथम् आक्रम्य जगद्विख्याते स्वामी-विवेकानंदे परिणतः तथा अभ्युदय शिखरम् उद्दिश्य मार्गम् आक्रमितुं युवकान् युवतीश्च इदं चरित्रं संप्रेर्य आदर्शभूते जीवने तेषां जीवनं परिणमितुं क्षमं भवेत् इति विश्वसिति अयं कविः।

भारतीय-नररत्नमालायां स्वामिवरम् उद्दिश्य विरचितं श्लोकम् अत्र उद्धृत्य विरमाम्यहम्। स एवम्

यो विद्वानपि रामकृष्णचरणे
　　　लीनः स्व' जिज्ञासया।
प्राप्तेष्टोऽखिलधर्मसंसदमशात्
　　　यो हिंदुधर्मोजसा।
धर्मं तं व्यतनोत् समस्तजगति
　　　प्रस्थाप्य संस्थां नवां।
यूनः प्रेरितवान् स उज्ज्वलकृतीः
　　　कर्तुं नरेंद्रो यतिः।

# विवेकानन्दचरितम् (माहात्म्यम्)

श्रीविश्वनाथ केशव छत्रे शास्त्री कल्याण (ठाणें)

श्रीरामकृष्ण–प्रियशिष्यवर्यः
प्रोद्बोधयन् स्नेहभरेण लोकान् ।
'विवेक-आनंद-यतिः पृथिव्यां
कालानुवर्तीव मुनिश्चकास ॥ १ ॥

मूर्तौ क्वचित् चत्वरभूविभागे
संस्थापितायां महतादरेण ।
चित्रे क्वचिद् मंडयति प्रकोष्ठं
प्रोद्भासयन्नेष पुरं गृहं वा ॥ २ ॥

उत्साहतेजोनिचयः समूर्तः
प्रभाविनी निर्भयधीरदृष्टिः ।
आत्मावलोकोद्भववीरता सा
लोकानिदानीमपि मोहयंति ॥ ३ ॥

कुत्रापि लग्ना गगने स्थिरा दृक्
सा दिव्यलोकान् ननु पश्यतीव
साक्षित्वरूपेण सकौतुकं च
वेदैः स्तुतान् भूरि तथा पुराणैः ॥ ४ ॥

कन्याकुमारी-निकटे त्रयाणाम्
उदन्वतां सुन्दरसंगमेऽसौ ।
ध्यायन् शिलायां जलवेष्टितायां'
स्वशीघ्रकर्तव्यपथं ददर्श ॥ ५ ॥

अज्ञान दारिद्र्य-निपीडितानां
लक्षावधीनां निजबांधवानाम् ।
अन्न-प्रदा-धापगता विधेया
सेवा मया शिष्यवरः सहेति ॥ ६ ॥

अमेरिकायां स समस्तधर्म-
सभां गतोऽध्यात्मरुचा दिदीपे ।
वेदांततत्त्वं जगदेकवंद्यं
प्रत्याययित्वा च सभां जिगाय ॥ ७ ॥

प्रवर्त्य नाम्ना स्वगुरोः स सेवा-
संघं भ्रमित्वा च चिरं स्वदेशे ।
देशांतरेष्वप्यकरोत् प्रचारं
ज्ञानस्य कल्याणकृतो नराणाम् ॥ ८ ॥

निजभुवि च विदेशेष्वाप्य शिष्यांश्च शिष्याः
निखिलमनुजसेवाकर्मणे क्षीयमाणः ।
सततमयमकाले त्यागमूर्तिर्यतीन्द्रो
दिवमहह ! विवेकानन्दनामाध्यरोहत् ॥९॥

## यतीन्द्रयशः काव्यप्रेरकम्

विवेकाख्ययतिः क्वायं,
क्वोपाधि[1]रहितो ह्यहम् ।
तितीर्षुर्दुस्तरं मोहाद्
उडुपेनास्मि सागरम् ॥ १ ॥

मंदः कवींद्र[2]कीर्त्तीच्छुर्
गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले
मोहादुद्बाहुरिव वामनः ॥ २ ॥

१. विद्यापीठ-उपाधि········ २. 'सुभाषचरितम्' काव्यं संमानितम् भारतशासनानुदानेन डॉ. राधाकृष्णन्-राष्ट्रपति निदेशात्, पं० क्षमादेवी पारितोषिकेण च ।

अथवा कृतवाग्द्वारे
कार्येऽस्मिन् पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे
सूत्रस्येवास्ति मे गतिः ।। ३ ।।

सोऽहमाजन्मशुद्धानां
शिवानुग्रहजन्मनाम् ।
बाल्यादति विरक्तानाम्
ईशेक्षोत्कटकामिनाम् ।। ४ ।।

रामकृष्णैकशिष्याणां,
स्त्रीसुखानंदवर्जिनाम् ।
आत्तसंन्यासदीक्षाणां
भारताटनशोचिनाम् ।। ५ ।।

दारिद्र्यार्ती अपाकर्तुं
अमाज्ञाने व्यपोहितुम् ।
सेविश्रेणिं[३] च निर्मातुं
'रामकृष्णमिशन्'-सृजाम् ।। ६ ।।

विवेकाख्ययतींद्राणां
चरितं स्फूर्तिदायकम् ।
दिव्यमाख्यामसामान्यं
तनुवाग्विभवोऽपि सन् ।। ७ ।।

तत्कीर्त्या कर्णमागत्य
चापलाय प्रचोदितः ।
पठित्वैतद् युवानश्च
दीपयंतु स्वजीवनम् ।। ८ ।।

## सर्गः १ (बाल्यम्)

अथ भारतभूरेषा
पुण्यभूरिति विश्रुता ।
रामकृष्णाद्यसामान्यै-
श्चरित्रैः विश्वमोहनैः ।। १ ।।

महात्मभिस्तथानेकैः
कल्याणपथदर्शिभिः ।
साधुभिर्देशभक्तैश्च
स्वातंत्र्यार्पितजीवनैः ।। २ ।।

हुतात्मभिश्च शास्त्रज्ञैस्
तत्त्वज्ञैर् विश्ववंदितैः ।
साध्वीभिः शूरराज्ञीभि-
श्चात्तसेवादृढव्रतैः ।। ३ ।।

संशोधकैश्च निष्णातै
विविधासु कलासु च ।
कवींद्रैश्च सुविख्याता
भूरियं भूमिमण्डले ।। ४ ।।

विवेकानंद एतेषां
यतींद्रो मूर्ध्नि तिष्ठति ।
विदेशेऽध्यात्मतेजोभिः
सर्वधर्मसभाजयी ।। ५ ।।

तच्चरित्रमहं पुण्यं
सानंदं गातुमारभे ।
उद्बोधनाय लोकानां,
युवकानां विशेषतः ।। ६ ।।

३. यतिश्रेणि ।

‘शुद्धबीजात्[1] फलं शुद्धम्’
इति साधु तुकाऽवदत् ।
तस्य प्रत्यय ऐतस्मिन्
चरित्रे लभ्यते स्फुटः ।। ७ ।।

वंगभूमौ जनुः प्राप
दत्ताभिधकुले शुभौ ।
दिने मकरसंक्रांते
नरेन्द्रो मंगलोत्तमे ।। ८ ।।

दुर्गाचरणनामास्य
ख्यात आसीत् पितामहः ।
देववाक्–पर्शिअन्–भाषा-
पटु विधिविशारदः ।। ९ ।।

बाल्यादेव विरक्तोऽसौ
मोक्षसिद्धिपरायणः ।
विवाहोत्तरमीक्षित्वा
प्रथमं जातपुत्रकम् ।। १० ।।

सद्यो गृहीतसंन्यासः
काशीमुद्दिश्य निर्ययौ ।
विश्वनाथाख्य तत्पुत्रः
पत्न्या संवर्धितो गृहे ।। ११ ।।

कालेन कृतविद्योऽसौ
पितृवच्च कुशाग्रधीः ।
कल्कत्तान्यायपीठेऽभा-
दचिराद् विधिपाटवात् ।। १२ ।।

अप्यर्जयन् धनं भूरि
मुक्तहस्तो ददद् ह्यसौ ।
सत्पात्रे स्वजनार्थं च,
संचेतुं न क्षमोऽभवत् ।। १३ ।।

भुवनेश्वरी च भार्यास्य
स्वभावेन ऋजुः सती ।
पत्युः पूर्णानुकूलासीद्
एतद् भाग्यं सुदुर्लभम् ।। १४ ।।

विशालं तत्कुटुंबं सा
न्याये नाशात् सुगेहिनी ।
मार्दवं वा कठोरत्वं
संश्रित्य समयोचितम् ।। १५ ।।

लब्धे साऽवसरे ग्रंथौ
भूषयंतौ स्वभारतम् ।
भारतं रामगाथां च
पठित्वार्थमचिंतयत् ।। १६ ।।

‘भारतं’ दिशते मार्गं
शश्वच्छिवकृते नृणाम् ।
स्वभावान् विविधान् स्पष्टं
वर्णयत्यापदस्तथा ।। १७ ।।

प्राप्यमानाः प्रपंचे,
ता हर्तव्या यत्नतः कथम् ।
धीशक्तियुक्तिभिर्भक्त्या-
ऽनन्यया श्रीप्रभोरिति ।। १८ ।।

‘रामगाथा’ दिशत्यस्मान्
पितुर्निर्मोचनं क्षणाद् ।
आह्वानस्वीकृतिं यूना
कृच्छ्रे कर्तव्यपालनम् ।। १९ ।।

१— शुद्ध बीजापोटी । फलें रसाल गोमटी ।।

आश्रितस्याभिमानित्वं
दत्तवाच-प्रपूरणम् ।
संपादनं विनष्टायाः
पुनः कीर्तेश्च संपदः ।। २० ।।

न्याये नैष्ठुर्यमुग्रं च
शुचित्वं चरितस्य च ।
इति ऐहिककल्याण-
पथदर्शनमुत्तमम् ।। २१ ।।

पारमार्थिककल्याण-
पथोऽपि व्यज्यतेऽनया ।
गाथया रघुनाथस्य
कथं तदवलोक्यताम् ।। २२ ।।

कल्याणानां निधानं तद्
रामनाम जपेत् सदा ।
अपराधान् अकृत्वैव
नरो ध्यायन् रघूत्तमम् ।। २३ ।।

ग्रंथद्वयोः कथा नैका
आसन्नस्या मुखोद्गताः ।
तीक्ष्णस्मरणशक्त्याश्च
बुद्धिमत्या विशेषतः ।। २४ ।।

कन्ये सा क्रमशः सूत्वा
विषीदंती हृदंतरे ।
पुत्रप्राप्त्यातुराऽत्यन्तं
बभूवास्वस्थमानसा ।। २५ ।।

सफलं जन्मपुत्राद् हि
स्त्रियाः सर्वबुधैर्मतम् ।
पुंनाम नरकाद् यस्मात्
त्रायते पितरौ असौ ।। २६ ।।

चक्रे व्रतान्यवोचच्च
समयान् देवताग्रतः ।
अपूजयदखंडं सा
भक्त्या च भगवच्छिवम् ।। २७ ।।

श्री-काशीविश्वनाथे सा
अभिषेकमकारयत् ।
आर्तवायेष्टपूर्त्यै च
तं प्रार्थयत संततम् ।। २८ ।।

साधनायां रता इत्थं
स्वप्ने साऽपश्यदेकदा ।
साक्षाद् ध्यानस्थमुत्थाय
विशंतं स्वोदरं शिवम् ।। २९ ।।

जातं च बालरूपेण;
प्राप्ता जागरमाशु च ।
आनंदं सा त्वनिर्वाच्य-
मन्वभूत् सुभगा सती ।। ३० ।।

पत्ये वृत्तं च विज्ञाप्य
साऽन्वभूद् गर्भधारणाम् ।
इष्टपूर्तेरुभौ हृष्टौ
प्रतीक्षायामतिष्ठताम् ।। ३१ ।।

सप्तम्यां पौषमासस्य
कृष्णपक्षस्य सा सुखम् ।
ग्रहेंदुग्रहराकेशमिते[१]—
विक्रमवत्सरे ।। ३२ ।।

( क्रमशः )

१—विक्रम सम्वत् १९१९ ।

आज भारत में

# दो करोड़ अस्सी लाख दम्पति ने परिवार नियोजन

अपनाया है और

# उनका जीवन बेहतर है

अगर आप भी उनमें से एक हैं तो अपने पड़ोसियों को बताइए यदि नहीं तो फिर देर कैसी



## छोटा परिवार सुखी परिवार

डीएवीपी 81/1[illegible]

# नारी-स्तम्भः—

## शरीरस्य गुणानाञ्च दूरमत्यन्तमन्तरम्

डॉक्टर श्रीमती राजेश्वरीभट्ट
प्राध्यापिका, लालबहादुरशास्त्रीकालेज, जयपुरम्

राजस्थानस्य सुप्रसिद्धकलासेविकायाः शाहोपाह्वायाः कुमारी प्रभाया नाम्ना को नाम जनिमानपरिचितो भवेत्। चित्रकलाया-क्षेत्रे तस्याः नाम कीर्तिश्च विश्वस्मिन् विश्वे प्रशंसाभाजने नितरामनुकरणीये च। तस्याः कला कृतयो निखिलस्यापि नारीजगतः प्रेरणास्रोतांसि विद्यन्ते। इतोऽपि महत्त्वपूर्णमिदं वर्तते यत् सत्यामपि शारीरिकबाधायां सा स्वकीयं संवेदनशीलं स्वान्तं स्वकीयासु कलाकृतिषु प्रवर्तयति। न सा श्रोतुं शक्नोति न च सा किमपि वक्तुं शक्नोति-सा मूका बधिरा च वर्तते। प्रभायाः प्रारम्भिकी शिक्षा नवदिल्यां जाता। तदनन्तरं च सा कनोडिया-महिला-महाविद्यालयेऽधीतवती। चित्र-कलायाः शिक्षां सा श्री पी० एन० चोयल नाम्नः गुरोः विशिष्टकलाविदः प्राप्नोत्। नैकशः सा सम्मानिता पुरस्कृता च जाता।

तस्याः चित्राणां प्रदर्शनी गतदिवसेषु कनाडादेशे ओण्टेरियो नाम्नि स्थाने समायोज्यत। तत्र प्रदर्शितचित्राणां वैदेशीयैश्चित्रकर्मपारङ्गतैः भारतीयैश्च भूरिशः प्रशंसा विहिता। अस्याः प्रदर्शन्याः समायोजनं ऑन्टेरियो इन्स्टीट्यूट फॉर स्टडीज इन एजूकेशन-स्य प्रौढशिक्षाविभागेन कृतम्। दशदिनावधि प्रदर्श्यमानामिमां शतशः सहस्रशो जनाः समवालोकयन्। तस्याः चित्रेषु राजस्थानस्य सुरम्यसांस्कृतिकवैभवस्य चित्रणमेकतः दृश्यतेऽपरतश्च ग्राम्यपरिवेशस्य छटा समवलोक्यते। लोकजीवनस्य नागरिकसभ्यतायाश्च चित्रणं समन्वितरूपेणैतेषां चित्राणां प्रमुखो विषयः। विकलांगवर्षेऽस्मिन् सा सहसैव सर्वेषां स्मृतिपथं समापतति। तस्याः जीवनं कलायै समर्पितं विद्यते।

मन्ये भारतीयनारीणामादर्शभूता सैषा प्रभा सर्वासां नारीणां प्रेरणाप्रदा महतः गर्व-स्य च कारणम्। एतादृश्यो नार्यः भारतस्य ख्यातिं विश्वे प्रसारयितुं समर्थाः अत एव तस्या जीवनमनुकरणीयम्।





बालोपयोगिनी लघुकथा

## ४३–न्यायप्रियो धर्मगुरुः [बगदाददेशस्य श्रेष्ठकथा]

श्री "पद्म" शास्त्री
१२८ मुक्तानन्दनगर, गोपालपुरारोड, जयपुरम्–१५

बगदादनगरे विश्वविख्यातो हासन-उल-रशीदनामको गुरुश्चावसत्। तस्मिन्नेव नगरे व्यवसायी चैको न्यवसन्निरपत्यः। एकदा स स्वप्नमपश्यद् यदेको वृद्धस्तत्पार्श्वमागत्य तं निर्भर्त्सयति–अरे मूढ़! त्वं मक्कातीर्थे तीर्थयात्रार्थं कथन्न गच्छसि?। तदादेशेन स यात्रार्थं निरगात्। स्वापणस्यवस्तुजातानि विक्रीयावशिष्टाः स्वर्णमुद्रा नीत्वा कस्यचिद् व्यवसायिनः पार्श्वमागत्य प्रोवाच, भ्रातः! अहं तीर्थयात्रार्थं गच्छामि मम स्वर्णमुद्रा भवता सुरक्षितव्याः। व्यवसायी प्राह–मम वस्तुभाण्डागारे यत्र कुत्रापि निक्षिप। सोऽपि तथा कृत्वा निरगात् तीर्थयात्रार्थम्।

सप्तवर्षाणि व्यतीतानि। अलीख्वाजामहोदयो न प्रत्यागतः व्यवसायी

बगदादनगर में एक हारुन-उल-रशीद नामक विश्वप्रसिद्ध-धर्मगुरु रहते थे। उसी नगर में एक व्यापारी भी रहा करता था, उसके कोई सन्तान न थी। एक दिन उसने स्वप्न देखा कि एक वृद्ध-पुरुष उसके पास आकर उसे फटकारता हुआ कहता है अरे मूर्ख! तू मक्का की तीर्थयात्रा करने क्यों नहीं जा रहा है?। वृद्ध के आदेश से वह तीर्थयात्रा के लिए निकल पडा। उसने अपनी दूकान की सभी वस्तुएं बेच दीं केवल बची हुई स्वर्णमुद्राएँ लेकर वह एक व्यापारी के पास आकर कहने लगा भाई! मैं तीर्थयात्रा पर जा रहा हूं, मेरी स्वर्णमुद्राएँ आप सुरक्षित रख लें। व्यापारी ने कहा—मेरे मालगोदाम में, जहाँ कहीं भी तुम चाहो रख दो। इसने भी स्वर्णमुद्राँए वहाँ रख दीं और तीर्थयात्रा को निकल पड़ा।

सात वर्ष बीत गये। अलीख्वाजा महोदय नहीं लौटे। व्यापारी उसकी स्व-

तस्य स्वर्णमुद्रा हर्तुमिच्छति । एकदा व्यवसायिनो भार्या प्रोवाच–अली-ख्वाजामहोदयो मृतो भवेदन्यथा स कथन्नागत इति कथयति भवान्, परं यदि स प्रत्यागत स्तर्हि किमुत्तरं दास्यति ? इत्थमपराधं कृत्वा न सुखमवाप्स्यति भवान् । परं लोभाविष्टो व्यवसायी भार्याभिमतं तिरस्कृत्य स्वर्णमुद्रा नेतुं प्राचलद् भाण्डागारे । लोभाविष्टो-जैतूनफलानां स्थाने नूतनजैतूनफलानि पात्रे निक्षिप्य स्वर्णमुद्रा निष्कास्य मिथ्यैव भार्यामभ्येत्य प्राह न सन्ति तस्मिन्पात्रे स्वर्णमुद्राः कालक्षेपेण धूलिसाज्जाताः ।

संयोगेन द्वितीये दिने ख्वाजाअली प्रत्यागतः । स्वचौर्यं निगूहितुं व्यवसायी ख्वाजामहोदयस्य हार्दिकं स्वागतमकरोत् । अलीमहोदयः प्राह–अपि सुरक्षिता मम स्वर्णमुद्राः ? व्यवसायी प्राह–भाण्डागारं गत्वा चानय स्वर्णमुद्राः । अली-ख्वाजा भाण्डागारं गत्वा यावद् विलोकयति तावन्न मिलिताः स्वर्णमुद्राः । विषण्णः सन् तत्पार्श्वमागत्य प्रोवाच–न सन्ति तत्र मम स्वर्णमुद्राः, यदि भवता निस्सारितास्तर्हि सुष्ठु, पुनर्मह्यं दातव्याः परं

र्णमुद्राएँ चोरना चाहता था । एक दिन व्यापारी की स्त्री ने कहा—आप कहते हो कि अली-ख्वाजा मर गया होगा, नहीं तो वह आज तक आ जाता ? यदि वह आगया तो आप उसको क्या उत्तर दोगे ? इस प्रकार अपराध करके आप सुखी नहीं रह सकते । परन्तु लोभी व्यापारी ने स्त्री की सलाह नहीं मानी, वह मालगोदाम से सोने की मोहरें लेने चल पड़ा । उसने बर्तन में जैतून फलों के स्थान पर नये जैतून के फल रख कर सोने की मोहरें निकाल लीं, घर आकर स्त्री को कह दिया कि उस बर्तन में तो सोने की मोहरें नहीं थीं । समय अधिक हो जाने से उनकी राख बन चुकी हैं ।

संयोग की बात थी कि दूसरे दिन ही अली-ख्वाजा आगया । अपनी चोरी को छिपाने के लिए व्यापारी ने ख्वाजा का खूब स्वागत किया । अली ने कहा—मेरी मोहरें सुरक्षित तो हैं ? व्यापारी ने कहा —मालगोदाम में जाकर अपनी मोहरें ले आओ । अली-ख्वाजा गोदाम में जाकर जब देखता है तो उसे सोने की मोहरें नहीं मिलीं । दुःखी होकर वह व्यापारी से कहने लगा । वहाँ मेरी सोने की मोहरें नहीं हैं, यदि आपने निकालीं हैं तो ठीक है, फिर मुझे लौटा देना, पर अभी आप

प्राप्तिस्वीकृतिं प्रयच्छतु भवान् । व्यवसायी प्राह—काः स्वर्णमुद्राः ? नाहं किमपि वेद्मि, भवता कुत्र निखाताः ? । व्यवसायिनो वचांसि निशम्य ख्वाजा रोदितुमारब्धः । विलपन् प्रोवाच—मयि निर्धने दयां कृत्वा मह्यं प्रयच्छ मम स्वर्णमुद्राः । व्यवसायी यावत्किमपि प्रत्युत्तरं न प्रादात् तदा अलीमहोदयः प्राह—अहं न्यायालयं गत्वा निर्णयं कारयिष्यामि ।

साक्षिणामभावे न्यायालयो न निर्णयं कर्तुं शशाक । एकदा ख्वाजामहोदयो धर्मगुरोः पार्श्वमागत्य स्वप्रार्थनापत्रं प्रादात् । धर्मगुरू रात्रौ वेषं परिवर्त्य नगरे भ्रमति, विलोकयति च प्रतिदिनं यत्कोऽपि अन्यायं तु न करोति । धर्मगुरुः प्रधानमन्त्रिणा सह नगरे-भ्रमन्नास्ते, एकत्र बालकाः क्रीडन्तश्चासन्, तेन तत्र दृष्टं यद् बालकाः समितिमायोज्य कथयन्ति मित्राणि ! अस्मिन्नाटके चाहं धर्मगुरुः, भवन्तः ख्वाजा-अलीमहोदयाः, व्यवसायिनं न्यायार्थमत्राकारयन्तु । न्यायाधीशबालको गभीरमुद्रया प्रोवाच, व्यवसायी स्वपक्षं प्रस्तोतु । व्यवसायी—बालकः प्रोवाच—न्यायाधिप ! अली-ख्वाजामहोदयस्य मयि मिथ्याभियोगः । न मया तस्य

मुझे उनकी रसीद दे दें। व्यापारी ने कहा—कौन सी मोहरें ? मैं कुछ नहीं जानता, आपने कहां रक्खीं थीं। व्यपारी के वचन सुनकर अली रोने लग गया। उसने विलाप करते हुए कहा—मुझ गरीब पर दया करके मेरी मोहरें मुझे दे दो। व्यापारी ने जब कुछ भी उत्तर नहीं दिया तब अली ने कहा—मैं न्यायालय जाकर निर्णय करवाऊँगा।

गवाहों के अभाव में न्यायालय भी निर्णय नहीं कर सका। एक बार अली-ख्वाजा ने धर्मगुरु के पास अपना प्रार्थना-पत्र प्रस्तुत किया। धर्मगुरु रात में भेष बदलकर नगर में प्रतिदिन घूम कर यह देखा करता था कि कहीं पर, किसी पर अन्याय तो नहीं हो रहा है ?। एकबार धर्मगुरु अपने प्रधानमन्त्री के साथ नगर में घूम रहा था, उसने देखा कि एक स्थान पर बहुत से बालक खेल रहें हैं। बालक सभा बना कर कह रहे हैं अरे मित्रो ! इस नाटक में, मैं धर्मगुरु हूँ, आपलोग अली-ख्वाजा हो, उस चोर व्यापारी को न्याय के लिए यहाँ पेश करो। बालक-न्यायाधीश ने गम्भीर-मुद्रा बना कर कहा—व्यापारी अपना पक्ष प्रस्तुत करे। व्यापारी-बालक कहने लगा न्यायाधीशमहोदय ! अली-ख्वाजा ने मुझ

स्वर्णमुद्राः चोरिताः । धर्मगुरुः प्राह–अहं तत्पात्रं द्रष्टुमिच्छामि यस्मिन् स्वर्णमुद्रा निक्षिप्ताश्चासन् । किञ्चित्क्षणानन्तरं पात्रमेतत्तत्रोपस्थापितं बालकैः ।

न्यायाधिपः प्राह–अली-ख्वाजा तु कथयति तीर्थयात्रां गतस्य मम सप्त-वर्षाणि व्यतीतानि परमस्मिन् पात्रे तु जैतूनफलानि नवानि दृश्यन्ते । केन कथं वा नूतन-जैतून-फलानि पात्रे निक्षिप्तानि ? । तस्मिन्नेव क्षणे तत्र जैतूनफलविक्रेता फलपरीक्षणार्थं समाकारितः । फलविक्रेता प्राह–भगवन् जैतूनफलानि तु नूतनानि वर्तन्ते । व्यवसायी किञ्चिद्वक्तुमिच्छति किन्तु न्यायाधिपो रक्षापुरुषानादिशति, अपराधिनं व्यवसायिनं शूलमारोपयन्तु भवन्तः । रक्षापुरुषा व्यवसायिनं नीत्वा शूले समारोपयन्ति, सर्वे बालका स्तालिकावादनपूर्वकं विसर्जयन्ति ।

स्वप्रधानमन्त्रिणा सह धर्मगुरु र्बालकानां न्यायालयस्य निर्णयं श्रुत्वा भृशं मुमुदे । द्वितीये दिने धर्मगुरुः स्वधर्म-स्थानके तं व्यवसायिनं, अलीख्वाजा महोदयं बालकन्यायाधीशं चान्यान् पौरानाकारयामास । सर्वानागतान्विलो-

पर झूठा मुकदमा लगाया है । मैंने उसकी मोहरें नहीं चुराई हैं । धर्मगुरु ने कहा—मैं उस पात्र को देखना चाहता हूँ जिसमें मोहरें रक्खीं थीं । कुछ ही देर बाद बालकों के द्वारा वह पात्र वहां लाया जाता है ।

न्यायाधीश ने कहा—अली-ख्वाजा का कहना है कि सात वर्ष पहले मैं तीर्थयात्रा पर गया था परन्तु इस पात्र में तो जैतून के नये फल दिखाई दे रहे हैं । ये नये फल किसने और कैसे रख दिये इस पात्र में । उसी समय जैतूनफलों के बेचने वाले को बुलाया गया । उसने कहा—भगवन् ! ये जैतून के फल नये हैं । व्यापारी कुछ कहना चाहता था किन्तु न्यायाधीश ने सिपाहियों को आदेश दिया कि अपराधी-व्यापारी को फांसी पर लटका दो । सिपाही व्यापारी को फाँसी पर लटका देते हैं । सभी बालक ताली बजाते हुए अपना खेल समाप्त करते हैं ।

जब अपने प्रधानमन्त्री के साथ धर्म-गुरु ने बालकों के न्यायालय का निर्णय सुना तो बहुत प्रसन्न हुआ । दूसरे दिन धर्मगुरु ने अपनी धर्मसभा में व्यापारी को, अली को, बालक-न्यायाधीश को तथा नगरवासियों को बुलाया । जब सब

क्य धर्मगुरुः प्रोवाच–बालकन्यायाधिप ! सर्वेषां समक्षं स्व-न्याय-नाटकं प्रस्तोतु भवान्। तथैव बालकानां समितिः संघटिता।

सर्वमेतन्निभाल्य चौरो व्यवसायी भृशमवेपत, रुदन् विलपन् प्रार्थनां कुर्वन् दया–भिक्षामयाचत परं धर्मगुरुणा कथितम्–शूलमारोपयत चौरं व्यवसायिनम्। अलीख्वाजा धर्मगुरो र्न्यायेन भृशं मुमुदे। धर्मगुरुरपि न्यायकारिणं बालकं पारितोषिकं दत्वा सभां विससर्ज।

आगये तब धर्मगुरु ने कहा—अरे बालक-न्यायाधीश ! सभी के सामने अपना "न्याय का नाटक" प्रस्तुत करो। उसी प्रकार वहाँ बालकों की सभा भी बनाई गई।

इस नाटक को देखकर व्यापारी बहुत अधिक काँपने लग गया, रोते हुए, विलाप करते हुए, प्रार्थना करते हुए, उसने दया की भीख मांगी परन्तु धर्मगुरु ने कहा—इस चोर व्यापारी को फांसी दे दो। अली-ख्वाजा, धर्मगुरु के न्याय से बहुत प्रसन्न हुआ। धर्मगुरु ने न्याय करने वाले बालक को पारितोषिक दिया और सभा को स्थगित कर दिया।

# सूक्ति-सुधा

## गजपुङ्गवस्तु धीरं विलोकयति चाटुशतैश्चभुङ्क्ते

डॉक्टर श्रीगङ्गाधरभट्टः
सह-आचार्यः, संस्कृतविभागे, राजस्थानविश्वविद्यालयः, जयपुरम्

( १ )

रोलम्बैर्न विलम्बितं विघटितं धूमाकुलैः कोकिलै,
मायूरैश्चलितं पुरेव रभसा कीरैरधीरैर्गतम् ।
एकेनापि सुपल्लवेन तरुणा दावानलोपप्लवः,
सोढः को न विपत्सु मुञ्चति जनो मूर्ध्नापि यो लालितः ।।

( सुभाषितरत्न० पृ० १८७ श्लो० १०४८ )

जब वन प्रान्त में आग लग गयी तो वृक्ष पर रहने वाले भौंरे एक क्षण भी नहीं रुके । धूम से पराभूत होकर कोयल भी चली गयी । शुकगण अधीर होकर पहले ही भाग गये, मोर उड़गये, और बेचारे वृक्ष ने ही अकेले दावानल का उपद्रव सहा । यह सत्य है कि विपत्ति आने पर कोई किसी का साथ नहीं देता चाहे वह सिर पर चढा कर ही क्यों न रखा गया हो । विपत्ति तो उसे अकेले को ही सहनी पड़ती है उसके बन्धुजन एवं आश्रित जन भी किनारा कर जाते हैं ।

( २ )

दानार्थिनो मधुकरा यदि कर्णतालै-
दूरीकृता करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा,
भृङ्गाः पुनर्विकचपद्मवनेवसन्ति ।।

( चाणक्यनीति अ० १७ श्लो० १८ )

भारती

Regd. No. 1379/51
R. J. No. 2617
Licence No. PP. 9.
Licence to Post
Without
Prepayment

दान अर्थात् हाथी का मद अथवा भिक्षा चाहने वाले भौंरों को हाथी ने मदान्ध-बुद्धि अर्थात् मद से अन्धबुद्धि अथवा अभिमान से अन्धमति से दूर कर दिया। परन्तु उसके विचार में यह नहीं आया कि इससे हाथी के कपोलों की ही शोभा घटेगी, भौंरे तो उड़कर खिले हुए कमल वन में चले जायेंगे। अर्थात् लक्ष्मी आदि के अभिमान से उन्मत्त राजा अथवा धनी व्यक्ति यदि विद्वानों का अपमान कर उन्हें निकाल दें तो यह उनकी ही हानि है। विद्वान् का तो सर्वत्र आदर होता है अतः उसकी इसमें किसी प्रकार की हानि होने की आशंका नहीं।

( ३ )

लाङ्गूलचालनमधश्चरणावपातं,
भूमौ निपत्य वदनोदरदर्शनञ्च ।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुंक्ते ।।

( भर्तृहरिनीतिशतक श्लो० ३१ )

कुत्ता रोटी का टुकड़ा देने वाले के समक्ष पूंछ हिलाता है, भूमि पर गिरकर मुँह और पेट दिखाता है परन्तु हाथी भोजन देने वाले के सामने गम्भीरतापूर्वक देखता है और बार-बार मनुहार करने पर खाता है।



प्रकाशक:-संस्कृत प्रचार परिषद् राजस्थान,
पता—भारती भवन, बी. १५ न्यू कालोनी, जयपुर-३०२००१। दूरभाष-७५४९६
राधेश्याम द्वारा श्री शङ्कर आर्ट प्रिण्टर्स, त्रिपोलिया बाजार, जयपुर में मुद्रित। दूरभाष-६१७६७